नि त्रिगुण च मरुत्[2] मायुधन्त । रेणुवर्जिता हिरण्मया रथा[3] "च एषाम्[4], ते साकम् धनैः बलैश्च[5] प्रादुर्भवन्ति ॥ २ ॥

रुद्रस्य ये मीळ्हुषः सन्ति पुत्रा यांश्चो नु दाधृविर्भरध्यै ।
विदे हि माता महो मही षा सेत् पृश्निः सुभ्वे३ गर्भमाधात् ॥ ३ ॥

रुद्रस्य । ये । मीळ्हुषः । सन्ति । पुत्राः । यान् । चो इति । नु । दाधृविः । भरध्यै ।
विदे । हि । माता । महः । मही । सा । सा । इत् । पृश्निः । सुऽभ्वे । गर्भम् । आ । अधात् ॥३॥

स्कन्द० रुद्रस्य ये मरुत मीळ्हुष सेक्तु । वर्षितुरित्यर्थः[6] । सन्ति भवन्ति पुत्रा । यान् च । उ नु इति पदपूरणौ । दाधृविः धृञ् धारणे । साधु धारयित्री भरध्यै[7] डुभृञ् धारणपोषणयोः । उदरेण धारयितुम् विदे ज्ञातवती । हि पदपूरणः । माता जनयित्री । कीदृशात् । उच्यते — महः महत । कीदृशी । उच्यते — महो सा । तच्छब्दश्रुतेर्यच्छब्दोऽप्याहार्यः । या महती सा । विदित्वा च सा इत् । इच्छब्दोऽत्र एवार्थे । सैव पृश्नि सुभ्वे "महदर्थं पततु[8] इत्यध्वन्[9] । महदसुदरे गर्भम् गर्भभूतान् आ अधात् दधातिर्धारणार्थे । आभिमुख्येन धृतवती । अस्या ऋच उत्तरयोश्च यच्छब्दश्रुते "तथा 'न इदुग्रा'" इत्यत्र च तच्छब्दश्रुतेरनयर्चैकवाक्यता ॥ ३ ॥

वेङ्कट० रुद्रस्य सेक्तु[10] ये भवन्ति पुत्रा । यान् च एव धारयन्त्राता हि भरणाय भवति[11] न म्रियते । तेषाम् माता प्रख्याताऽऽसीत् महतोऽपि मही सा पृश्नि । सा[12] एव[13] शोभनभवनाय[14] मरुद्गणाय गर्भम् आहितवती ॥ ३ ॥

न य ईषन्ते जनुषोऽया न्व१न्तः सन्तोऽवद्यानि पुनानाः ।
निर्यद् दुह्रे शुचयोऽनु जोषमनु श्रिया तन्वमुक्षमाणाः ॥ ४ ॥

न । ये । ईषन्ते । जनुषः । अया । नु । अन्तरिति । सन्तः । अवद्यानि । पुनानाः ।
निः । यत् । दुह्रे । शुचयः । अनु । जोषम् । अनु । श्रिया । तन्वम् । उक्षमाणाः ॥ ४ ॥

स्कन्द० न ये मरुत ईषन्ते पारयन्ते जनुष पञ्चमीश्रुते प्रभृतीति वाक्यशेष । जन्मन एव प्रभृति अया "एतेरय् छान्दसत्वात्[11] [12]प्रत्यय प्रातिपदिकत्वादुदात्तत्वात्[12]" । षष्ठीबहुवचनस्य स्थादेश । गन्तृणां मेघानाम् । नु[14] इति पदपूरण । अन्त मध्ये सन्त अवद्यानि यानि तत्र गर्हाण्युदकानि तानि पुनाना शोधयन्त । ये च नि दुह्रे निर्दुहन्ति मेघान् शुचय शुद्धा दीप्ता अनु जोषम् 'जुषते' ( निघ २,६ ) इति कान्तिकर्मा । अनुकामम् । इच्छानन्तरमेवेत्यर्थ[16] । अनु

1. °त भपक्तो मूको. 2 2 भासित मूको 3. इवेत्य मूको. 4. वसित्तु° मूको. 5 भरध्यै मूको 6 6 मह उदृत्° मूको 7 7 त उद्या° मूको 8. °क मूको 9 °न्ति मूको 10. स मूको 11 श्व मूको 12. °मवाभ° मूको. 12 13. एतेरय छान्द° वि° भ, एतेऽस्य छा°द° वि° 14-14. प्रत्ययश° मूको. 15 अनु मूको. 16. इच्छया° मूको

श्रिया । अनु इत्युपसर्गश्रुतेः श्रियेति च तृतीयाश्रुतेर्योग्यक्रियाशब्दाध्याहारः । अनुगताः श्रिया । शोभमाना इत्यर्थः । तन्वम्[1] शरीरम् आत्मीयम् उक्षमाणाः उदकेन सिञ्चन्तः[2] ॥ ४ ॥

वेङ्कट० न ये गच्छन्ति जातान्[3] मनुष्यान् शीघ्रं गन्तव्यानि स्थानानि शरीरस्य अन्तः सन्तः अवद्यानि पुनानाः । "निः दुहन्ति" दीप्ताः यदा उदकम् इच्छायाम्, तदानीम् अनुगताः श्रिया भवन्ति विस्तृतमुदकं सिञ्चन्तः[4] ॥ ४ ॥

मुक्षू न येषु॑ दो॒हसे॑ चिद॒या आ नाम॑ धृ॒ष्णु मारु॑तं॒ दधा॑नाः ।
न ये स्तौ॒ना अ॒यासो॑ म॒ह्ना नू चि॑त् सु॒दानु॒रव॑ यासदु॒ग्रान् ॥ ५ ॥

मु॒क्षु । न । येषु॑ । दो॒हसे॑ । चि॒त् । अ॒याः । आ । नाम॑ । धृ॒ष्णु । मारु॑तम् । दधा॑नाः ।
न । ये । स्तौ॒नाः । अ॒यासः॑ । म॒ह्ना । नु । चि॒त् । सु॒ऽदानुः॑ । अव॑ । या॒स॒त् । उ॒ग्रान् ॥ ५ ॥

स्कन्द० 'मक्षु क्षिप्रम् । न-शब्दोऽत्रोपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः' (या ७,३१) इति पदपूरणः[5] । "येषु प्रथमार्थे" सप्तमीयम्[6] । ये[7] दोहसे दोहनाय मेघस्य । चित्-शब्दः पदपूरणः । अयाः मेघं प्रति गन्तारः नाम उदकम् (द्र. निघ १,१२) धृष्णु अभिभवितृ । प्रभूतमित्यर्थः । मारुतम् मरुतां यद्योग्यं तत् आ दधानाः आभिमुख्येन वहतः । ये च न स्तौनाः । स्तुनाः इति प्रकृत्यन्तरम्, तस्मात् स्वार्थे तद्धितः । न महान्तः न स्थविराः । तरुणा इत्यर्थः । अयासः शत्रून् प्रति गन्तारः मह्ना महता सेनालक्षणेन बलेन । यांश्च नु चित् । नुचिच्छब्दोऽत्र नशब्दस्यार्थे । 'नू चित् सहोजाः' (ऋ १,५८,१) इति यथा । न सुदानुः शोभनोऽपि दाता यजमानः अव यासत् । अपरेषेव वा इत्येतस्य स्थाने । आयासयति क्लेशयति । आगतास्तेभ्य एव हविर्ददाति, नैनान् प्रतीक्षयतीत्यर्थः । उग्रान् आभसक्तान्[8] क्रूरान् वा ॥ ५ ॥

वेङ्कट० ये ■ देवेषु[11] धर्षणशीलम् मारुतम् नाम आ दधानाः उपासयन्तो मनुष्याः शीघ्रम् उदारेषु धनस्य दोहार्थं गन्तारो भवन्ति, ■ यां[11] ये[11] घोराः महत्त्वेन । तान् उद्गूर्णान् क्षिप्रमेव शोभनदानः यजमानः अवेजते प्रेयरक्षितान् करोति । [13]स्तोमयतिपर्यायः स्तौयतिः[14] ॥ ५ ॥

[14]इति पञ्चमाष्टके प्रथमाध्याये सप्तमो वर्गः[15] ॥

त इ॑दु॒ग्राः शव॑सा धृ॒ष्णुषे॑णा उ॒भे यु॑जन्त॒ रोद॑सी सु॒मेके॑ ।
अध॑ स्मैषु रोद॒सी स्वशो॑चि॒राम॑वत्सु तस्थौ॒ न रोकः॑ ॥ ६ ॥

---

१. भवन्तं मूको. २. निन्ध··· मूको. ३. °ता मूको. ४-४. निर्दे° वि° अ. ५. °त्तम् वि° भ°. ६-६. ···शब्द क कथमा( उपरता° वि° )मौपन्यादस्त्युपमार्थीयत्वादस्त्युपमार्थी अस्य( मौपम्यादस्त्युपमार्थी अस्य वि° भ°. ) सेनत्वर्थे प्रयोग इति पदपूरणः मूको. ७-७. ···प्रथ° मूको. ८. °भीदा मूको. ९. नास्ति वि°. १०. मसक्तान् मूको. ११. देवेषु वि° भ°. १२. ये मूको. १३. वेवे वि°, १४-१४. तौ नयति स्तंभरतौ नयति वि° ख; ते नयति पर्योव. तौ नयति भ°; एते नयति पर्यायवती स्वति छम; नौ शब्दनिपर्यायौ ह प्रस्तावः. १५-१५. नास्ति मूको.

स्तोता । स्तोत्रैरेवास्माव प्रापयतीत्यर्थ[१] । अन्नवर्जित[२] अभीशुवर्जितश्च रजस प्रेरक मरुतां 'गण वि गच्छति[३] द्यावापृथिव्यौ मार्गात्[४] स्तोतृणामभिलषितान् साधयन्[५] । द्यावापृथिव्योर्मध्येन गच्छतीत्यर्थ[६] ॥ ७ ॥

नास्य॑ व॒र्ता न त॑रु॒ता न्व॑स्ति॒ मरु॑तो॒ यमव॑थ॒ वाज॑सातौ ।
तो॒के वा॒ गोषु॒ तन॑ये॒ यम॒प्सु स व्र॒जं द॒र्ता पार्ये॒ अध॒ द्योः ॥ ८ ॥

न । अ॒स्य॒ । व॒र्ता । न । त॒रु॒ता । नु । अ॒स्ति॒ । मरु॑तः । यम् । अव॑थ । वाज॑ऽसातौ ।
तो॒के । वा॒ । गोषु॑ । तन॑ये । यम् । अ॒प्ऽसु । सः । व्र॒जम् । द॒र्ता । पार्ये॑ । अध॑ । द्योः ॥ ८ ॥

स्कन्द० न अस्य वर्ता वारयिता प्रतिबन्धकः, न अपि तरुता हिंसिता । नु इति पदपूरण । अस्ति भवति हे मरुत !, यम् अवथ पालयथ वाजसातौ सङ्ग्रामे तोके वा 'यस्य च भावेन भावलक्षणम्' (पा २,३,३७) इत्येवमिय[७] 'सप्तमी । सप्तमीश्रुतेश्च[८] लक्षणभूतयोग्यक्रियापदाध्याहार । पुत्रेषु वा प्राक्षण्येषु गोषु वा प्राप्तव्यासु तनये पौत्रेषु वा, यत् च अप्सु वृष्टिलक्षणेषूदकेषु, स एव च व्रजम् गोष्ठम् दर्ता साधु दारयिता । दरण दानार्थमवयवस्य पृथक् करणम् । तस्य साधुकारी गोष्ठात् गवामेकदेश साधु लभत इत्यर्थ । कस्मिन् काले । उच्यते— पार्ये पृणातीत्यस्य च दानकर्मण एतद्रूपम् । दानकाले । अध इति पादपूरण । तस्य स्वभूतम् गोष्ठमुच्यते । द्यो दिव द्युम्नन्मात्र ॥ ८ ॥

वेङ्कट० न अस्य गन्ता अभिगन्ता, न अपि तरिता मनुष्यस्य विद्यते हे मरुत !, यम् रक्षथ युद्धे, तोकादिनिमित्तम् यम् युद्धे अवथ[९] । शत्रोर्हस्तस्य गोमतः सङ्ग्रामस्य पार्ये[१०] अहनि गवामाहरणाय दर्ता[११] भवति[१२] ॥ ८ ॥

प्र चि॒त्रम॒र्कं गृ॑ण॒ते तु॒राय॒ मारु॑ताय॒ स्वत॑वसे भरध्वम् ।
ये सहां॑सि॒ सह॑सा॒ सह॑न्ते॒ रेज॑ते अग्ने पृथि॒वी म॒खेभ्यः॑ ॥ ९ ॥

प्र । चि॒त्रम् । अ॒र्कम् । गृ॒ण॒ते । तु॒राय॑ । मारु॑ताय । स्वऽत॑वसे । भ॒र॒ध्व॒म् ।
ये । सहां॑सि । सह॑सा । सह॑न्ते । रेज॑ते । अ॒ग्ने॒ । पृ॒थि॒वी । म॒खेभ्यः॑ ॥ ९ ॥

स्कन्द० प्र इत्युपसर्गो भरध्वमित्याख्यातेन सम्बन्धयितव्य । चित्रम् विचित्र पूजनीय वा अर्कम् स्तुतिलक्षण मन्त्रम्[१३] गृणते स्वात्मयेनाय कर्मणि कर्तृशब्द । तादर्थ्ये च चतुर्थी । स्तुत्याय तुराय त्वरमाणाय[१४] हिंसित्रे वा शत्रूणाम् मारुताय मरुतां समूहाय स्वतवसे स्वबलाय प्र भरध्वम् प्रहरत प्रापयत । उच्चारयतेत्यर्थ । अथवा 'अर्क' (निघ २,७) इत्यन्ननाम । हविर्लक्षणमन्नम् । स्तुत्यादिगुणस्य मरुत्समूहस्यार्थाय[१५]आहवनीय प्रति[१५] प्रापयतेत्यर्थ । पुत्रपौत्रस्य धाय प्रैष , ऋत्विजां

---

१ °यन्ती° मूको. २ अनवर्जित° वि° अ°, तर्जित च लम. ३-३. °प्रति° त्रि° अ° ४. °गौ वि° अ°, °गौ स लम. ५. साधयं वि° अ° क, साधयं लम ६ °यान्तो° मूको ७. °त्येवमिवेतिम वि°. ८-८ °गीभूते° त्रि°, °गौ युत° त्रि° अ. ९. भवत मूको. १०. ॥ ॥६,१२,३।२६,१ भाष्यम्, या° मूको ११ दता मूको. १२. °वन्ति हवर्त अ°. १३ मन्त्रग त्रि°. १४. त्वरणाय मूको १५-१५. हवनीयं दिशति मूको

या। किञ्च ये मरुतः सहांसि परबलानि सहसा स्वेन बलेन सद्यः अभिभवन्ति। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तेभ्य रेजते बिभेति कम्पते वा भयेन हे अग्ने! 'पृथिवी अपि' किमुतान्यानि भूतानि इत्यर्थः। अपठितमपि महद्ग्रहणमत्र। महद्भ्यः। अथवा महः (निघ ३,१७) इति यज्ञनाम। तस्मात् तत् मरोतीरपस्मिन्नर्थे क्विप्। यज्ञकारिणः। महसा यज्ञकारिणः। तेभ्यो मखेभ्यः। मरुतो हि वृष्टिप्रदानेन 'देवार्थे हविःसम्पादनाय निष्पादकत्वेन' यज्ञकारिणः॥ ९॥

वेङ्कट० प्र भरत त्विषम् अन्न स्तूयमानाय क्षिप्राय मादताय स्वभूतबलाय गणाय। ये मरुतः बलेन बलानि अभिभवन्ति, तेभ्यो मंहनीयेभ्य पृथिवी इयम् अग्ने! कम्पते। मरुतां बलम् अमेनिवर्तयति॥ ९॥

त्विषीमन्तो अध्वरस्येव दिद्युत् तृषुच्यवसो जुह्वो नाग्नेः।
अर्चत्रयो धुनयो न वीरा भ्राजज्जन्मानो मरुतो अधृष्टाः॥ १०॥

त्विषिऽमन्तः। अध्वरस्यऽइव। दिद्युत्। तृषुऽच्यवसः। जुह्वः। न। अग्नेः।
अर्चत्रयः। धुनयः। न। वीराः। भ्राजत्ऽजन्मानः। मरुतः। अधृष्टाः॥ १०॥

स्कन्द० त्विषीमन्तः 'त्विषिरिति दीप्तिनाम। दीप्तिमन्तः। अध्वरस्य इव दिद्युत्। मत्वर्थे द्योतन इति दिद्युत् अग्निः। यज्ञस्येवाहुभूतोऽग्निः आहवनीयादिः। तृषुच्यवसः क्षिप्रगामिनः जुह्व इति 'जुहः ज्वाला। ज्वाला इवाग्नेः यथा। अर्चत्रयः अर्चनीयाः न अग्ने इत्यत्र इति। अर्चनीयाः अग्निभिरित्यर्थः। धुनयः शत्रूणां। अथवा अर्चितारः अत्रयो येषां ते अर्चत्रयः। अर्चनीया अग्निभिरित्यर्थः। धुनयः शत्रूणां कम्पयितारः न वीराः। पुरस्तादुपचारोऽत्रायं नशब्दः सामर्थ्यादुपमार्थीयः। वीरा इव। यथा शूरा राजानः शत्रूणाम् कम्पयितारः तद्वदित्यर्थः। भ्राजज्जन्मानः दीप्तजन्मानः मरुतः अधृष्टाः अनभिभूतपूर्वाः केनचित्॥ १०॥

वेङ्कट० दीप्तिमन्तः अध्वरस्येव उपरस्था द्योतमानाः क्षिप्रगामिनः ज्वाला इव अग्नेः अर्चनीयाः शत्रूणाम् कम्पयितार इव वीराः दीप्यमानप्रादुर्भावाः मरुतः शत्रुभिरनाधृष्टाः॥ १०॥

तं वृधन्तं मारुतं भ्राजदृष्टिं रुद्रस्य सूनुं हवसा विवासे।
दिवः शर्धाय शुचयो मनीषा गिरयो नाप उग्रा अस्पृध्रन्॥ ११॥

तम्। वृधन्तम्। मारुतम्। भ्राजत्ऽऋष्टिम्। रुद्रस्य। सूनुम्। हवसा। आ। विवासे।
दिवः। शर्धाय। शुचयः। मनीषाः। गिरयः। न। आपः। उग्राः। अस्पृध्रन्॥ ११॥

स्कन्द० तम् वृधन्तम् नित्यमेव वर्धमानम् मारुतम् मरुतां समूहम् भ्राजदृष्टिम् ऋष्टिः शक्तिका।

---

१ भवन्ति मूको २ २ पृथिव्यपि मूको ३ प्रदाने मूको ४ ४ थे वन मूको ५ हर° ...ऽत्र लव ६ 'उज्ज्वल° मूको ७ मा तो वि° मा ऽ° ८ मन मूको ९ ९ विपि दीप्ति° मूको १० १० जु ला मूको ११ नम वि° ब [illegible] अचन् मा मूको १२ १२ °नीया न मूको १४ १४ 'मान अधृ° मूको १५ वचित मूको १६ °मानानि मूको १७ °मान मा° वि° क, दीप्यमाने प्रा° मा°, दीप्यमाना प्रा° लक्ष

दीप्तशक्तिकम् रुद्रस्य सूनुम् अपत्यभूतम् हवसा आह्वानेन आ विवासे [1]परिचरामि। आह्वयामीत्यर्थः[1]। किमर्थम्। उच्यते—दिवः पञ्चमीश्रुतेः आगन्तुमिति शेषः। द्युलोकादागन्तुम् शर्धाय उत्साहाय। द्युलोकादस्मद्यज्ञं प्रति आगन्तुमुत्साहं करिष्यतीत्येवमर्थमित्यर्थः। कस्मात्। उच्यते—[2]यस्मात् शुचयः शुद्धा वा[2] दीप्ता वा मनीषाः स्तुतयः गिरयः न पर्वता इव आपः इव च उग्राः अप्रसह्याः तोत्राः अस्पृधन् स्पर्धन्ते वा। यस्मादहं शोभनतरा अहं शोभनतरेत्येवं परस्परं स्पर्धायुक्ता इव स्तुतय उपकल्पिता इत्यर्थः ॥ ११ ॥

वेङ्कट० तम् वर्धमानम् मारुतम् दीप्यमानायुधम् रुद्रस्य सूनुम् गणं स्तोत्रेण परिचरामि। दिवः वेनाय[3] शुचीनि स्तोत्राणि मेघा इव व्याप्ताः उद्गूर्णाः इतरेतरं स्पर्धन्ते ॥ ११ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये अष्टमो वर्गः[4] ॥

[ ६७ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः। मित्रावरुणौ देवता। त्रिष्टुप् छन्दः[5]।

विश्वेषां वः सतां ज्येष्ठतमा गीर्भिर्मित्रावरुणा वावृधध्यै ।
सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ असमा बाहुभिः स्वैः ॥ १ ॥

विश्वेषाम्। वः। सताम्। ज्येष्ठऽतमा। गीःऽभिः। मित्रावरुणा। ववृधध्यै।
सम्। या। रश्माऽइव। यमतुः। यमिष्ठा। द्वा। जनान्। असमा। बाहुऽभिः। स्वैः ॥१॥

स्कन्द० [6]"'विश्वेषां वः' मैत्रावरुणमेकम्"। मित्रावरुणदेवत्यमेतत्[6] सूक्तम्। विश्वेषाम् निर्धारणे इयं षष्ठी। सर्वेषाम् वः युष्माकम्, सताम् प्रशस्तानां देवानां मध्ये ज्येष्ठतमा अतिशयेन प्रशस्यौ गीर्भिः मित्रावरुणौ वावृधध्यै अत्यर्थं वर्धयितुम्, आह्वयामीति शेषः। 'या यौ रश्मा इव' रश्मयो रज्जवः ताभिरिव सम् यमतुः संयतवन्तौ। बद्धवन्तावित्यर्थः। यमिष्ठा अतिशयेन यन्तारौ द्वा द्वावपि जनान् शत्रुभूतान् मनुष्यान् असमा असदृशावन्यैर्देवैः। केन संयतवन्तौ। बाहुभिः स्वैः आत्मीयैरेव ॥ १ ॥

वेङ्कट० सर्वेषामेव विद्यमानानां[7] युष्माकम् अतिशयेन प्रशस्यौ स्तुतिभिः मित्रावरुणौ प्रवृत्तोऽहं वर्धयितुम्। सम्[8] यमतुः यौ रश्मिनेव[9] अतिशयेन[10] यन्तारौ द्वौ मिलितौ[11] जनान् असदृशौ केनचिदपि[12] बाहुभिः आत्मीयैः ॥ १ ॥

इयं मद्वां प्र स्तृणीते मनीषोप प्रिया नमसा बर्हिरच्छ ।
यन्तं नो मित्रावरुणावधृष्टं छर्दिर्यद्वां वरूथ्यं सुदानू ॥ २ ॥

---

१-१. य…र्थः मूको. २-२. यस्मात्…द्धा मूको. ३. वेनाय मूको. ४-४. नास्ति मूको. ५. °रुणौ दे° वि[1] अ. ६-६. वा…°दमे° मूको. ७. °मेव वि[1]. ८. सर्व मूको. ९. तु. वेप १, २५४६d. १०. दिना वि[1] अ[1]; मर्दिने ए कम. ११. त्रुटितम् मूको. १२. °नैचि° वि[1].

अश्वा न या वाजिना पूतबन्धू ऋता यद् गर्भमदितिर्भरध्यै ।
प्र या महि महान्ता जायमाना घोरा मर्ताय रिपवे नि दीधः ॥ ४ ॥

अश्वा । न । या । वाजिना । पूतबन्धू इति पूतऽबन्धू । ऋता । यत् । गर्भम् । अदितिः । भरध्यै ।
प्र । या । महि । महान्ता । जायमाना । घोरा । मर्ताय । रिपवे । नि । दीधरिति दीधः ॥४॥

स्कन्द० अश्वा न अश्वाविव या यौ वाजिना वेगवन्तौ पूतबन्धू 'बन्धु (निघ २,१०) इति धननाम, ज्ञातिपर्यायो वा । शुद्धधनौ[1] शुद्धज्ञाती वा ऋता सत्यौ यत् यौ च गर्भम् गर्भभूतौ अदिति देवमाता भरध्यै धारयितुम् । शक्तवतीति शेषः । या यौ च महि महद् बलम् महान्ता शरीरेण वीर्येण वा महान्तौ जायमानावेव घोरा अप्रसह्यौ क्रूरौ वा शत्रूणामुपरि मर्ताय मनुष्याय रिपवे शत्रुभूताय । शत्रुभूत "मनुष्य हन्तुमित्यर्थ "। प्र नि दीधः । व्यत्ययेनैकवचनम् । प्रकर्षेण नियमन च धारितवन्तौ । यच्छन्दश्रुते अस्या ऋच परस्याश्च 'ता हि क्षत्रम्' इत्यनयैकवाक्यता ॥ ४ ॥

वेङ्कट० अश्वाविव यौ बलिनौ शुद्धबन्धनौ सत्यौ यौ गर्भभूतौ अदिति भर्तुमैच्छत् । प्रादुर्भावयत यौ महत्त्वम् । महान्तौ जायमानौ तौ घोरौ रिपवे[1] मनुष्याय अदिति नि दधारेति ॥ ४ ॥

विश्वे यद् वां मंहना मन्दमानाः क्षत्रं देवासो अदधुः सजोषाः ।
परि यद् भूथो रोदसी चिदुर्वी सन्ति स्पशो अदब्धासो अमूराः ॥ ५ ॥

विश्वे । यत् । वाम् । मंहना । मन्दमाना । क्षत्रम् । देवास । अदधु । सऽजोषा ।
परि । यत् । भूथ । रोदसी इति । चित् । उर्वी इति । सन्ति । स्पश । अदब्धास । अमूरा ॥

स्कन्द० विश्वे सर्वे यत् वाम् युवाभ्याम् मंहना महत्त्वेन मन्दमाना मोदमाना क्षत्रम् अपक्षितमपि धनमेव[2] । बल धन वा देवास देवा अदधु दत्तवन्त । बलवन्तौ धनवन्तौ वा कृतवन्त इत्यर्थ । सजोषा सम्प्रीयमाणा । यत् यौ च परि भूथ परिभवथ व्यक्[3] कुरुथ । सर्वतो व्याप्नुथ इत्यर्थ । रोदसी चित् द्यावापृथिव्यौ उर्वी महत्यौ । ययोश्च लोकपालत्वात् गति दास्[4] भाविका लोकस्य कृताकृतमत्यवेक्षिण अदब्धास अहिंसिता कनचिद् अमूरा अमूढा । यावन्त्[5] इत्यर्थ ॥ ५ ॥

वेङ्कट० विश्वे यत् युवा महत्त्वेन मादयन्त युवयो देवा सङ्गता बलम् अदधु[6] । यत् च विस्तृते द्यावापृथिव्यौ परि भवथ । तदानीं युवयोर्भवन्ति तेजांसि अहिंसितानि अमूढानि ॥ ५ ॥

इति पञ्चमाष्टके प्रथमाध्याय नवमो वर्ग[6] ॥

---

१ शुद्ध नौ मूको. २ २ मनुष्याञ्जुमि° मूको. ३ करो मूको. ४ मा° वि° अ°. ५-५ पदा मूको. ६ ६ नास्ति मूको.

ता हि क्षत्रं धारयेथे अनु द्यून् दृंहेथे सानुमुपमादिव द्योः ।
दृळ्हो नक्षत्र उत विश्वदेवो भूमिमातान् द्यां धासिनायोः ॥ ६ ॥

ता । हि । क्षत्रम् । धारयेथे इति । अनु । द्यून् । दृंहेथे इति । सानुम् । उपमात्ऽइव । द्योः ।
दृळ्हः । नक्षत्रः । उत । विश्वऽदेवः । भूमिम् । आ । अतान् । द्याम् । धासिना । आयोः ॥ ६ ॥

स्कन्द॰ ता तौ । हि इति पदपूरणः । क्षत्रम् बलम् धारयेथे अनु द्यून् अनुदिवसम् । दिनेदिने प्रवर्धमानमपरो भवथ इत्यर्थः । दृंहेथे दृढीकुरुथश्च वृष्ट्यादिद्वारेण 'सानुम् समुच्छ्रितप्रदेशम् उपमात् इव'। 'उपमे' ( निघ २,१६ ) इत्यन्तिकनाम । सन्निकृष्टादिव द्योः द्युलोकात् । 'पर्यायोनिर्देशाद् अवस्थितमिति शेषः'। किञ्च दृळ्हः स्थिरः नक्षत्रः । क्षद हिंसायाम् । न क्षणोति इति 'नक्षत्रः मनुष्यस्य' साद्गुण्याद्' 'रक्षोभिर्हिंसितुमशक्यो मेघः उत अपि च विश्वदेवः सूर्यः मित्रावरुणयोः प्रसादेन भूमिम् आ अतान् आतनोति वृष्टिद्वारेण' विस्तारयति द्याम् दिवं च धासिना हविर्लक्षणेन ( तु निघ २,७ ) आयोः 'मनुष्यस्य सम्बन्धिना । यदा मित्रावरुणयोः' सम्बन्धी 'सोमयागो भवति, तदा अतस्येव' 'मित्रावरुणयोः प्रसादेन वृष्टिरित्यर्थः' ॥ ६ ॥

वेङ्कट॰ तौ हि बलम् धारयेथे । दिवसेषु दृंहेथे च दिवः समुच्छ्रितमादित्यं 'वत्सामिव स्थूणां' । ततश्च दृढः दिवि व्याप्नुवानः विश्वदेवाः आदित्यो[10] भवति । तादृशौ भूमिम् दिवं च मनुष्यस्य हविषा प्रीतौ आ तनुत[11] ॥ ६ ॥

ता विग्रं धैथे जठरं पृणध्या आ यत् सद्म सभृतयः पृणन्ति ।
न मृष्यन्ते युवतयोऽवाता वि यत् पयो विश्वजिन्वा भरन्ते ॥ ७ ॥

ता । विग्रम् । धैथे इति । जठरम् । पृणध्यै । आ । यत् । सद्म । सऽभृतयः । पृणन्ति ।
न । मृष्यन्ते । युवतयः । अवाताः । वि । यत् । पयः । विश्वऽजिन्वा । भरन्ते ॥ ७ ॥

स्कन्द॰ [12]ता तौ मित्रावरुणौ विग्रम् मेधाविनम्[12] (तु निघ ३,१५) धैथे धारयथः[13] जठरम् उदरम् पृणध्यै । पृण प्रीणने, पूरणार्थो वा सामर्थ्यात् । प्रीणयितुं पूरयितुं वा । यत् अविज्ञातम् । उच्यते—यत्, सद्म सदनं स्थानं सोमयागम्[14] सभृतयः समाना दक्षिणालक्षणा[15] भृतिर्येषां ते सभृतयः समानदक्षिणा[16] ऋत्विजः आ पृणन्ति आभिमुख्येन प्रीणयन्ति पूरयन्ति[17] वा सोमैः । किञ्च न मृष्यन्ते मृष तितिक्षायाम् अन्यत्र, इह तु विसारणार्थो वा 'मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठाः' ( ऋ १,७१,१० ) इति यथा, विच्छेदार्थो वा । न विस्मर्यन्ते विच्छिद्यन्ते वा केनचित् युवतयः तरुणस्त्रीसादृश्यः । काः पुनरेताः । मैत्रावरुणमहाहुतयः । अथवा युवतिभिर्धर्मो दृश्यस्य[18] ।

1-1 सानु॰ उप॰ मूको.  2-2 °र्धेत ति शेष मूको.  3-3 नक्षत्र । सात् या मनु॰ मूको.
4. गुण्यात् मूको.  5-5. 'तिद्धु मित्रावरुणयो...वृष्टिद्वारेण ( ॰ वि॰ म )मूको.  6-6. 'यस्य = मित्रा॰ मूको  7-7 सोमयागो...तेव मूको  8-8. मित्रावरुणयो ... मूको.  9-9. वंशानि वस्थूणा वि॰ स्थ॰ ल, वत्सामिव स्थूणा लभ.  10 °यस्त्वौ मूको.  11. °तुन मूको  12-12. ॰ °माविनं मूको.  13. धारित मूको  14 सोमान मूको.  15. दक्षिणालक्षणा मूको.  16. समाना दक्षिणा मूको.  17, पादित वि॰,

युवतयो मिश्रिता । केन[1] । पयसा । कुत एतत् । 'मैत्रावरुण पयसा श्रीणाति' ( तै ६,४,८,२ ) इति विधानात् । यथाता अगतपूर्वां अन्यदेवता[2] प्रति स्था । ता[3] कीदृश । उच्यते—यत् या पय क्षीर हे विश्वमिन्वा । सर्वप्रीणयितारौ[4] वि भरन्ते विविध धारयन्ति । पयसा सम्मिश्रिता इत्यर्थः ॥ ७ ॥

वेङ्कट० तौ मेधाविन यजमान धारयेथे जठरम् आत्मीय सोमेन पूरयितुम् । आ पूरयन्ति यदा यज्ञगृहम् ऋत्विज उपविशन्ति । न अभिभूयन्ते दिश आगच्छन्त्य शत्रुभि । हे विश्वस्य प्रीणयितारौ[1] यदा विविधम् उदक मयत्या प्रेरित[2] धारयन्ति ॥ ७ ॥

ता जिह्वया सदमेदं सुमेधा आ यद् वां सत्यो अरतिर्ऋते भूत् ।
तद् वां महित्वं घृतान्नावस्तु युवं दाशुषे वि चयिष्टमंहः ॥ ८ ॥

ता । जिह्वया । सदम् । आ । इदम् । सुऽमेधा । आ । यत् । वाम् । सत्य । अरति । ऋते । भूत् ।
तत् । वाम् । महिऽत्वम् । घृतऽअन्नौ । अस्तु । युवम् । दाशुषे । वि । चयिष्टम् । अंह ॥ ८ ॥

स्कन्द० ता तौ जिह्वया वाचा स्तुतिलक्षणया सदम् सदा आ इदम् जिह्वयेति करणस्य, आ इति चोपसर्गस्य, इदमिति च क्रियाविशेषणस्य श्रुतेर्योग्यक्रियापदाध्याहार । आभिमुख्यनैव स्तौमि । 'सुमेधा । मेधा[5] ग्रहणग्राहिणी प्रज्ञा । तया[6] शोभनया युक्त । अथवा 'मेधा' ( निघ २, १० ) इति धननाम[7] । शोभनेन धनेन हविर्लक्षणेन युक्त । यत् यो वाम्[8] युवां प्रति सत्य अविसंवादी अरति गन्ता उभयोरपि द्यावापृथिव्यो । क पुनरसौ । हव्यवाडग्नि । स ऋते यज्ञ आ भूत् आभिमुख्येन भवति[9] । यो युवां प्रति यज्ञे हवींषि गृहीत्वाऽग्निरभिमुखो[10] भवतीत्यर्थः । किञ्च तत् वाम् युवयो महित्वम् माहात्म्यम् हे घृतान्नौ । आहुतिलक्षणघृतभोजनौ[11] अस्तु अस्माद् मति भवतु । तच्छब्दश्रुतेर्यच्छब्दोऽनाध्याहार्य । यो युवम् युवाम् दाशुषे षष्ठ्यर्थे एषा चतुर्थी । हवींषि दत्तवतो यजमानस्य वि चयिष्टम् विपूर्वश्चिनोतिरपनयने । अपनयथ अंह पापम् । स्वेन माहात्म्येनास्माकमपि पापम् अपनयतमित्यर्थः ॥ ८ ॥

वेङ्कट० तौ[11] वाचा सुप्रज्ञ सदैव उदकम् आ याचत । 'इदम्' ( निघ १,१२ ) इत्युदकनाम । आभिमुख्येन भवति, यदा वाम् प्रति सत्य हि गन्ता यज्ञ । तदा वां हे घृतान्नौ ![12] युवयोर्महत्त्व प्रादुर्भूतम् अस्तु । युवाम् दाशुषे विनाशयत पापम् ॥ ८ ॥

प्र यद् वां मित्रावरुणा स्पूर्धन् प्रिया धाम युवधिता मिनन्ति ।
न ये देवास ओहसा न मर्ता अयज्ञसाचो अप्यो न पुत्राः ॥ ९ ॥

प्र । यत् । वाम् । मित्रावरुणा । स्पूर्धन् । प्रिया । धाम । युवऽधिता । मिनन्ति ।
न । ये । देवास । ओहसा । न । मर्ता । अयज्ञऽसाच । अप्य । न । पुत्रा ॥ ९ ॥

---

1 क मूको 2. कन्यादे° मूको 3 3 यत मूको 4 पूर्व मूको 5-5. इमेधायो मूको 6 6 प्रज्ञायो मूको 7 धनेन मूको 8. युवां मूको 9. भवत मूको 10 °ग्नि-रभिमुख्यो मूको 11 नास्ति वि° अ°. 12. घृतान्नौ वि° अ°; घृतान्नौ स हस्त

स्कन्द० यत् ये वाम् युवयोः हे मित्रावरुणा! स्पूर्धन् स्पर्धनेन। युवाभ्यां सह स्पर्धयेत्यर्थः। प्रिया इष्टानि धाम स्थानानि युवधिता युवयोर्हितानि प्र मिनन्ति प्रकर्षेण हिंसन्ति। न च ये देवासः देवाः। असुरा इत्यर्थः। ओहसा न। वहेरिदं रूपम्। तृतीयानिर्देशाच्च युक्ता इति शेषः[1]। वहनेन हविषां न युक्ताः। देवेभ्यो हवींषि[2] न ददतीत्यर्थः। मर्ताः मनुष्याः अयज्ञसाचः यज्ञानाम् असेवितारः। अकर्तार इत्यर्थः। अप्यः न न च ज्ञातयः युवयोरस्माकं वा, नापि पुत्राः। तान् हतमिति शेषः ॥ ९ ॥

वेङ्कट० प्र मिनन्ति यत्र युवयोः हे मित्रावरुणौ! स्पर्धमानाः[3] प्रियाणि स्थानानि युवयोर्हितानि। न ये[4] देवाः[5] युवयोः [5]वहनसाधनेन स्तोत्रेण[5] युज्यन्ते, न अपि मनुष्याः यज्ञम् असेवमानाः[6]। ज्ञातयोः पुत्रयः पुत्राः वा न युज्यन्ते स्तोत्रेण। तान् सर्वान् हत इति वाक्यशेषः ॥ ९ ॥

वि यद् वाचं कीस्तासो भरन्ते शंसन्ति के चिन्निविदो मनानाः ।
आद् वां ब्रवाम सत्यान्युक्था नकिर्देवेभिर्यतथो महित्वा ॥ १० ॥

वि । यत् । वाचम् । कीस्तासः । भरन्ते । शंसन्ति । के । चित् । निऽविदः । मनानाः ।
आत् । वाम् । ब्रवाम । सत्यानि । उक्था । नकिः । देवेभिः । यतथः । महिऽत्वा ॥ १० ॥

स्कन्द० ययोः वाचम् स्तोत्रलक्षणाम् कीस्तासः मेधाविनामैतत् (द्र. निघ ३,१५)। मेधाविनः ब्राह्मणलक्षणाः स्तोतारः वि भरन्ते विविधं धारयन्ति। कुर्वन्तीत्यर्थः। "शंसन्ति च के चित्" होतृलक्षणाः निविदः "अग्निर्देवेद्धः" (ऋखि ५,५,१) इत्यादयो मन्त्रा निविदः[7] तान् मनानाः जानन्तः। किम्। सामर्थ्याद् शंसितुं वा 'युष्मान् युष्मन्माहात्म्य'[8]। अथवा मनानाः इति मन्यतेः कानिजन्तस्य रूपम्। कामयमानाः यज्ञफलम्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तयोः। आत् इति पदपूरणः। वाम् युवयोः ब्रवाम वयमिति शेषः सत्यानि अविसंवादीनि उक्था स्तोत्राणि। किञ्च नकिः न युवाम् देवेभिः देवैरन्यैः सह यतथ युद्धोऽध्यात्म यतसि: सम्पूर्णो इत्यर्थः, 'वैश्वानरो यतते सूर्येण' (ऋ १,९८,१) इति यथा। सङ्गच्छेथे। युक्ता भवथ इत्यर्थः। महित्वा महत्त्वेन। सर्वेभ्यो युवयोरधिकतरं माहात्म्यमित्यर्थः ॥ १० ॥

वेङ्कट० वि हरन्ते यत् वाचम् मेधाविनः। शंसन्ति च के चित् युवयोः निविदः जानन्तः[10]। तदानीं तदनन्तरमेव[11] युवयोः ब्रूमः सत्यानि उक्थानि। न युवाम् अन्यैर्देवैः सङ्गच्छेथे महत्त्वेन ॥ १० ॥

अवोरित्था वां छर्दिषो अभिष्टौ युवोर्मित्रावरुणावस्कृधोयु ।
अनु यद् गावः स्फुरानृजिप्यं धृष्णुं यद् रणे वृषणं युनजन् ॥ ११ ॥

अवोः । इत्था । वाम् । छर्दिषः । अभिष्टौ । युवोः । मित्रावरुणौ । अस्कृधोयु ।
अनु । यत् । गावः । स्फुरान् । ऋजिप्यम् । धृष्णुम् । यत् । रणे । वृषणम् । युनजन् ॥ ११ ॥

---

1. हवी मूको. 2. °मानो वि[2] अ[1]. 3. न वि[2]. 4. देव वि[2]; देव अ[2]. 5-5. °धनन्तो° वि[2] अ[1]. 6. °क्षमास° अ[2]. 7-7. शंसन्ति… मूको. 8-8. नास्ति वि[2] अ. 9-9. युष्मन्माहात्म्य मूको. 10. जानतः स्तुवन्त 11. °व यानि मूको.

स्कन्द० अवो पार्थिवो इत्था अमुत्र स्वर्गे लोके वाम् युवयोः स्वभूतस्य छर्दिषः गृहस्य अभिष्टौ इषु इच्छायामित्यस्यैतद्रूपम्। चतुर्थ्यर्थे च सप्तमी। अभीच्छायै प्रार्थनायै। लाभार्थमित्यर्थः। किं कृतम्। उच्यते—युवो युवयो हे मित्रावरुणौ! अस्कृधोयु कृध्विति ह्रस्वनाम। स्वार्थिकप्रत्ययान्तम् कृधुक इति ह्रस्वनामसु पठितम् (तु. निघ ३,२)। न कृधु अस्कृधु दीर्घम्, तदायुर्यस्य तद् अस्कृधोयु। 'दीर्घकालावस्थायि। मम पुत्राः[1] पौत्राश्च करिष्यन्तीत्यर्थः। अथवा अस्कृधोयुरिति दधातेर्वा दानार्थस्य धेट् पाने 'इत्यस्य वा एतद्रूपम्'[2]। अकृतधानम्। अन्यैर्यजमानैरदत्तपूर्वं युवाभ्याम् वा अपीतपूर्वमित्यर्थः[3]। किं पुनस्तत्। सोमलक्षणमन्नम्। अस्माभिः प्रकल्पितमिति वाक्यशेषः। अनु यत् अनु कर्मप्रवचनीय प्रतिना समानार्थ। 'यत् प्रति'[4] गाव वसतीवर्येकधनालक्षणा[5] आप स्फुरान् स्फुरन्ति। यत्र मक्षिप्ता आपश्चलन्त्यो दृश्यन्त इत्यर्थः। अथवा 'मित्रावरुणयोरुपयोज्यानि गाव इति गौरिहोच्यते[6]'। स्फुरानित्यपि स्फुरतिर्गत्यर्थः। तत् प्रति युष्मदीया गावो गच्छन्तीत्यर्थः। 'ऋजिप्यम्। ऋजुभिर्वसतीवर्यैः कथमाभ्याभिराप्यायते'[7] इति ऋजिप्यम्। ऋजूनाम्[8] यजमानाना वा ऋजिप्यम्। यत् च धृष्णुम् धृष्णु अभिभवितृ ब्राह्मणाम् रणे सङ्ग्रामे वृषणम् वर्षितृ युनजन् अभिषवादिभि संस्कारैर्युक्तवन्त ऋत्विज। संस्कृतवन्त इत्यर्थ ॥ ११ ॥

वेङ्कट० रक्षकयो इत्थं युवयो सुखस्याभ्येषणे हे मित्रावरुणौ! तत्सुखम् अनवगामन भवति। 'यदा हि[9] युवयो स्तवाः[10] ऋजुगामिन स्तोतारम् अनु स्फुरन्ति। यदा वा धृष्णुम्[11] वृषणम् स्वयजमान सङ्ग्रामे युञ्जन्ति ॥ ११ ॥

[12]इति पञ्चमाष्टके प्रथमाध्याये दशमो वर्ग[12] ॥

[ ६८ ]

[13]भरद्वाजो बार्हस्पत्य ऋषि। इन्द्रावरुणौ देवता। त्रिष्टुप् छन्द, नवमीदशम्यौ जगत्यौ[13]।

श्रुष्टी वां यज्ञ उद्यतः सजोषा मनुष्वद् वृक्तबर्हिषो यजध्यै।
आ य इन्द्रावरुणाविषे अद्य महे सुम्नाय मह आववर्तत् ॥ १ ॥

श्रुष्टी। वाम्। यज्ञः। उत्ऽयतः। सऽजोषाः। मनुष्वत्। वृक्तऽबर्हिषः। यजध्यै।
आ। यः। इन्द्रावरुणौ। इषे। अद्य। महे। सुम्नाय। महे। आऽववर्तत् ॥ १ ॥

स्कन्द० 'ऐन्द्रावरुणमुत्तरम्'। इन्द्रावरुणदेवत्यमुत्तरं सूक्तम्। श्रुष्टी सुख क्षिप्रो वा वाम् युवयो यज्ञ उद्यत कर्तुं सङ्कल्पते सजोषा जुषे सेवनार्थस्यैद रूपम्। सह युवाभ्या सेवनीय मनुष्वत् मनुष्यवत् यथा कश्चिन्मनुष्य कस्यचिन्मनुष्यस्य किञ्चित् सङ्कल्पयेत् तद्वत्। वृक्तबर्हिष ऋत्विङ्नामैतत् (तु. निघ ३,१८)। ऋत्विज आध्वर्यवादय[14] यजध्यै यजनाय[15]।

---

११. याल युवो मूको. २२ इत्यस्येतद् मूको ३ अपीतपू मूको ४४ य० मूको. ५ वा°° ये° मूको ६६ °जना नि यहो° मूको ७७. ऋजि तृतिय° मूको ८ ऋजूना वा मूको. ९-९. °दा हि वि° क° १० अगम वि° ए, मस्मारा अ°; असवच छम ११. धृष्ण वि° क°, धृष्ण ए एभ. १२ १२. नास्ति मूको. १३ अध्वर्यो मूको १४. दजमानाय मूको

मध्वर्युर्युवा यद्यतीत्येवमर्थमित्यर्थः । स कतमो यज्ञः । उच्यते—स अयं युवाम् इन्द्रावरुणौ इषे अन्नाय अत्र मंहे महते । महद् दानं दापयितुमित्यर्थः । न च केवलान्नाय । किं तर्हि । सुम्नाय सुखाय महते च आववर्तत् अस्मान् प्रत्यावर्तयति ॥ १ ॥

वेङ्कट० क्षिप्रं[1] सुयशो उरुत यत्र सम्राति[2] मनोरिव यजमानस्य यागार्थम् आववर्तत् य वाम्[3] इन्द्रावरुणौ अन्नार्थम्[4] अत्र महते[5] च सुखाय महति यज्ञे, तस्येति ॥ १ ॥

ता हि श्रेष्ठा॑ दे॒वता॑ता तु॒जा शूरा॑णां॒ शवि॑ष्ठा॒ ता हि भू॒तम् ।
म॒घोनां॒ मंहि॑ष्ठा तुवि॒शुष्म॑ ऋ॒तेन॑ वृत्र॒तुरा॒ सर्व॑सेना ॥ २ ॥

ता । हि । श्रेष्ठा॑ । दे॒वऽता॑ता । तु॒जा । शूरा॑णाम् । शवि॑ष्ठा । ता । हि । भू॒तम् ।
म॒घोना॑म् । मंहि॑ष्ठा । तु॒वि॒ऽशु॒ष्मा॑ । ऋ॒तेन॑ । वृ॒त्र॒ऽतुरा॑ । सर्व॑ऽसेना ॥ २ ॥

स्कन्द० 'यावुक्तगुणौ ता तौ इन्द्रावरुणौ । हि इति' पदपूरणः । श्रेष्ठा अतिशयेन प्रशस्यौ देवताता 'सर्वदेवात्तातिल्' ( पा ४,४,१४२ ) इत्येवमत्र स्वार्थे तातिल् प्रत्ययः । इयौ तुजा हिंसितारौ शत्रूणाम् । किञ्च शूराणाम् मध्ये शविष्ठा अतिशयेन बलवन्तौ ता हि हिशब्दः पूर्वार्थे । तावेव भूतम् भवथ युवाम् । मघोनाम् धनवतां च मध्ये मंहिष्ठा 'मंहते' ( निघ ३,२० ) इति दानकर्मा । अतिशयेन दातारौ । 'तुविशुष्मा बहुबलौ च' ऋतेन सत्येन च बलेन च वृत्रतुरा वृत्रस्य हिंसितारौ सर्वसेना सर्वाभिः सेनाभिरुपेतौ ॥ २ ॥

वेङ्कट० तौ हि श्रेष्ठौ यज्ञे हिंसितारौ शत्रूणाम्, तथा शूराणाम् मध्ये 'अतिशयेन बलिनौ' तौ हि भवतम्, धनवताम् अतिशयेन दातारौ[6] बहुबलौ[7] सत्येनैव[8] वृत्रस्य हिंसितारौ समस्तसेनौ ॥ २ ॥

ता गृ॑णीहि न॒म॒स्ये॑भिः शू॒षैः सु॒म्नेभि॒रिन्द्रा॒वरु॑णा चका॒ना ।
वज्रे॑णा॒न्यः शव॑सा॒ हन्ति॑ वृ॒त्रं सिष॑क्त्य॒न्यो वृ॒जने॑षु॒ विप्रः॑ ॥ ३ ॥

ता । गृ॒णी॒हि॒ । न॒म॒स्ये॑भिः । शू॒षैः । सु॒म्नेभिः॑ । इन्द्रा॒वरु॑णा । च॒का॒ना ।
वज्रे॑ण । अ॒न्यः । शव॑सा । हन्ति॑ । वृ॒त्रम् । सिस॑क्ति । अ॒न्यः । वृ॒जने॑षु । विप्रः॑ ॥ ३ ॥

स्कन्द० ता तौ गृणीहि आत्मन एवायमन्तरात्मनः प्रैषः । स्तुहि हे अन्तरात्मन्[1] । न च कस्तौ । किं तर्हि । नमस्येभिः परिचरणीयैः शूषैः तदीयसनातनैर्बलैः सह सुम्नेभिः सुखैः । स्तोतृणाम् सुखकरैरित्यर्थः । कौ तौ । उच्यते—इन्द्रावरुणौ चकाना कामयमानौ च स्तुती । परोऽर्धर्चो यच्छब्दमध्याहृत्यैकवाक्यता नेयः । ययोर्मध्ये वज्रेण अन्यः एकः इन्द्रः शवसा

---

१. °शयो वि॰ अ॰ २. सुरा॰ वि॰ अ॰ ३ वा ऊ इत्थ ४ अन्नार्थम् मूको ५ यह॰ मूको ६६ °गुणौ हीति मूको ७७ °शुष्मा न मूको ८ मासि वि॰ अ ९९ °येनाबलि॰ वि॰ ऊ इत्थ १० यन्तौ मूको ११ बहुलौ वि॰ १२. तस्य नैव वि॰, तस्ये नैव अ॰.

बलेन च हन्ति वृत्रम् असुरम् मेघं वा । सिषक्ति [१]तं घ्नन्तम् अन्यः इतरः[१] वरुणः वृजनेषु 'वृजनम्' ( निघ २,९ ) इति बलनाम, तृतीयार्थे चात्र सप्तमी । स्वसेनालक्षणैर्बलैः विप्रः मेधावी[२] ॥ ३ ॥

वेङ्कट० वौ स्तुहि नमस्यैः तयोर्बलैरुच्चरितैः सुखैश्च[३] इन्द्रावरुणौ वोध्यमानौ । तयोः अन्यः वज्रमादाय बलेन हन्ति शत्रुम् । सेवते अन्यः दुश्चरितेषु नरं जिघृक्षुः वरुणः मेधावी ॥ ३ ॥

प्राश्च॒ यन्नर॑श्च वावृ॒धन्त॒ विश्वे॑ दे॒वासो॑ न॒रां स्वगू॑र्ताः ।
प्रैभ्य॑ इन्द्रावरुणा महि॒त्वा द्यौश्च॑ पृथिवि भूतमु॒र्वी ॥ ४ ॥

प्राः । च॒ । यत् । नरः॑ । च॒ । व॒वृ॒धन्त॑ । विश्वे॑ । दे॒वासः॑ । न॒राम् । स्वऽगू॑र्ताः ।
प्र । ए॒भ्यः॒ । इ॒न्द्रा॒व॒रु॒णा॒ । म॒हि॒ऽत्वा । द्यौः । च॒ । पृ॒थि॒वि॒ । भू॒तम् । उ॒र्वी इति॑ ॥ ४ ॥

स्कन्द० ग्नाः च स्त्रियश्च यत् यौ नरः च मनुष्याश्च वावृधन्त स्तुतिभिर्वर्धयन्ति । विश्वे सर्वे च देवाः नराम् षष्ठीनिर्देशाद् उपकर्तुमिति शेषः । मनुष्याणामुपकर्तुम् स्वगूर्ताः स्वयमेवाभ्युद्यताः । स्वोत्साहेनैव मनुष्याणामुपकारिण इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । प्र इत्येतस्य सम्बन्धि भूतमिति चतुर्थपादस्थम् आख्यातम् तृतीयेऽपि पादेऽनुषक्तव्यम् । प्र भूतम् भू प्राप्तावित्यस्याण्णर्थोऽयमिदं रूपम् । प्रकर्षेण प्रापयतम् । धनानि दत्तमित्यर्थः । एभ्यः अस्मभ्यं हे इन्द्रावरुणौ ! महित्वा स्वेन 'माहात्म्येन । न केवलमिन्द्रावरुणौ' । किं तर्हि । द्यौः च । च-शब्दात् त्वमपि हे पृथिवि ! प्र भूतम् उर्वी विस्तीर्णे । इन्द्रावरुणयोः प्रसादेन युवां द्यावापृथिव्यौ प्रभूतम् इत्येवम् अथेन्द्रावरुणयोः[४] प्राधान्याद् द्यावापृथिव्योश्च गुणभावाद् ऐन्द्रावरुणत्वस्याऽविरोधः ॥ ४ ॥

वेङ्कट० देवपत्न्यः देवाश्च यदा अवीवृधन्त मरुतश्च, 'देवानां मध्ये ये[५] स्वयमेव उद्गूर्णाः । तदा एभ्यः देवेभ्यो देवपत्नीभ्यश्च प्र अभवतम् महत्त्वेन हे इन्द्रावरुणौ ! । हे द्यावापृथिव्यौ ! विस्तीर्णे युवां च प्राभूतम्[५] युद्धे साहाय्यार्थं ॥ ४ ॥

स इत्सु॒दानु॒ः स्ववाँ॑ ऋ॒तावेन्द्रा॒ यो वां॑ वरुण॒ दाश॑ति॒ त्मन् ।
इ॒षा स द्वि॒षस्त॑रे॒द्दास्वा॒न्वंस॑द्र॒यिं र॑यि॒वत॑श्च॒ जना॑न् ॥ ५ ॥

सः । इत् । सु॒ऽदानुः॑ । स्वऽवा॑न् । ऋ॒तऽवा॑ । इन्द्र॑ । यः । वा॒म् । व॒रु॒ण॒ । दाश॑ति । त्मन् ।
इ॒षा । सः । द्वि॒षः । त॒रे॒त् । दास्वा॑न् । वंस॑त् । र॒यिम् । र॒यि॒ऽवतः॑ । च॒ । जना॑न् ॥ ५ ॥

स्कन्द० इत्-शब्द एवार्थे । सः एव सुदानुः शोभनो दाता स्ववान् धनवांश्च ऋतवा यज्ञवांश्च[६] । यः किं करोति । उच्यते — इन्द्रा ! "अन्यतरनाम्नेदं तदेकदेशत्वाद्" उभयोरभिधानम् । इन्द्रैकदेशभी !

---

१-१. कं घ्नन्त...तरः मूको. २. मेधाविनश्च स्त मूको. ३. सर्वै° वि' अ' क; सते° लम. ४-४ माहा...र्व° मूको ५. °मेवे...न्द्रा° वि°; °मिथ्य इन्द्रा° वि' अ. ६-६. °धनामर्थो यः वि' अ'; °धनावर्थे यः स लभ. ७ प्रादुर्भूत वि' अ'. ८. सहाया यत वि'; सहायो यत अ'. ९. नास्ति वि'. १०-१०. °नाम्ने...त्वाद्° मूको.

य याम् युवाभ्याम् वरुणा[१] हे वरुणैकदेशौ[१] दाशति ददाति हवींषि त्मना आत्मनैव । किञ्च इषा अन्नेन सः द्विषः द्वेष्टॄन् तरेत् सुञोऽप्यत्र वर्तते अतिपूर्वोऽर्थे द्रष्टव्य । अतितरति अतिगच्छति । द्वेष्टृभ्योऽन्नेन धनेन इत्यर्थः । दास्वान् दानवान् । किञ्च वनते भजते । भजत इत्यर्थः । रयिम् धनम् रयिवत च धनवतश्च[२] जनान् मनुष्यान् पुत्रपौत्रादीन् । पुत्रादयोऽस्य धनवन्तो भवन्तीत्यर्थः ॥ ५ ॥

वेङ्कट० स एव शोभनदान धनवान् यज्ञवांश्च । हे इन्द्रावरुणौ[३] युवाभ्याम् य आत्मनैव प्रयच्छति, स अन्नेन शत्रून् तरति । दानवान् भजते च धनम्, धनवत च दासादीन्[४] ॥ ५ ॥

[५]इति पञ्चमाष्टके प्रथमाध्याये एकादशो वर्गः[५] ॥

यं युवं दाश्वध्वराय देवा रयिं धत्थो वसुमन्तं पुरुक्षुम् ।
अस्मे स इन्द्रावरुणावपि ष्यात् प्र यो भनक्ति वनुषामशस्तीः ॥ ६ ॥

यम् । युवम् । दाशुऽअध्वराय । देवा । रयिम् । धत्थः । वसुऽमन्तम् । पुरुऽक्षुम् ।
अस्मे इति । सः । इन्द्रावरुणौ । अपि । स्यात् । प्र । यः । भनक्ति । वनुषाम् । अशस्तीः ॥ ६ ॥

स्कन्द० यम् युवाम् दाश्वध्वराय [६]दाशु पूर्वमेव दत्त[६] हविरध्वरे येन स दाश्वध्वर कृतयज्ञो यजमान तस्मै हे देवौ[७] रयिम् धनम् धत्थ वसुमन्तम् मणिरूप्यादिभिर्वसुभिर्युक्तम् पुरुक्षुम् [८]बहुभिरासयोग्यम् । अन्यत्राप्यन्यदन्नार्हमित्यर्थः[८] । अस्मे स इन्द्रावरुणौ । अपि अपि शब्द[९] अस्मे [९]इत्यनेन सह सम्बध्यते[९] । अस्माकमपि स हे इन्द्रावरुणौ[१] स्यात् भवेत् । अस्मभ्यमपि तद् दत्तमित्यर्थः । [९]य किं करोति । य प्र भनक्ति[९] वनुषाम् वनुष्यतेर्हन्तिकर्मण । हन्तॄणां स्वभूता अशस्ता अप्रशस्ता । हन्तारश्च शत्रवो ये अस्माकं [१०]कुत्सा प्रयुक्ते[१०] ता यद्बल निवर्तयितु शक्नोतीत्यर्थः ॥ ६ ॥

वेङ्कट० यम् [११]युवां यजमानाय[११] [१२]हे देवौ[१२] रयिम् धनम्[११] धत्थ[१४] वासयितृ[१५] पुत्रपशुयुक्त बहुशब्दम्, हे इन्द्रावरुणौ! स रयि अस्मासु अपि भवतु, प्रकर्षेण य मृद्नाति घ्नताम् बाधा ॥ ६ ॥

उत नः सुत्रात्रो देवगोपाः सूरिभ्य इन्द्रावरुणा रयिः ष्यात् ।
येषां शुष्मः पृतनासु साह्वान् प्र सद्यो द्युम्ना तिरते ततुरिः ॥ ७ ॥

उत । नः । सुऽत्रात्रः । देवऽगोपाः । सूरिऽभ्यः । इन्द्रावरुणा । रयिः । स्यात् ।
येषाम् । शुष्मः । पृतनासु । साह्वान् । प्र । सद्यः । द्युम्ना । तिरते । ततुरिः ॥ ७ ॥

---

१ नास्ति मूको. २ नास्ति वि°. ३ °रुणौ वि° अ°. ४-४ नास्ति मूको. ५-५ नास्ति मूको. ६-६ °दाश न्यमा° मूको. ७ वरुण° मूको. ८-८ द स मूको. ९-९ य कि प्रभनक्ति मूको. १०-१० कुत्सा प्रयुज्यते मूको. ११-११ न वि° अ°. १२-१२ भेदेवौ वि° अ°, १३ नास्ति वि° स लभा. १४ धत्त मूको. १५ °यितु वि° अ°.

स्कन्द० अपि च नः अस्माकम् सुत्रामः [1]शोभनाः त्रातारो यस्य स सुत्रामः। शोभनरक्षण.[1] । देवगोपा देवा गोपायितारो यस्य स देवगोपाः सूरिभ्यः 'सूरिः' ( निघ ३, १६ ) इति स्तोतृनाम, षष्ठ्यर्थे चात्र चतुर्थी। स्तोतॄणां हे इन्द्रावरुणा! रयिः धनम् स्यात् युवयोः प्रसादेन भवेत्। येषाम् अस्माकं [2]युवयोरेव प्रसादेन शुष्मः[2] बलम् पृतनासु सङ्ग्रामेषु साह्वान् अभिबभूवान्। शत्रूनभिभवत्वित्यर्थः। सद्यः एव द्युम्ना यशांसि वा अन्नानि वा धनानि प्र तिरते प्रवर्धयति[3] तुतुरिः त्वरिता तूर्विता वा शत्रूणाम् ॥ ७ ॥

वेङ्कट० अपि च अस्मभ्यं शोभनपालनः देवा गोप्तारो[4] स यस्य स्तोतृभ्यो हे इन्द्रावरुणौ! रयिः स्यात्[5]। येषाम् अस्माकं बलं सङ्ग्रामेषु शत्रून् अभिभवत् सद्यः एव धनानि प्र वर्धयति तरणशीलम्[6] ॥ ७ ॥

नू न इन्द्रावरुणा गृणाना पृङ्क्तं रयिं सौश्रवसाय देवा ।
इत्था गृणन्तो महिनस्य शर्धोऽपो न नावा दुरिता तरेम ॥ ८ ॥

नु । नः । इन्द्रावरुणा । गृणाना । पृङ्क्तम् । रयिम् । सौश्रवसाय । देवा ।
इत्था । गृणन्तः । महिनस्य । शर्धः । अपः । न । नावा । दुःऽइता । तरेम ॥ ८ ॥

स्कन्द० नु क्षिप्रम् नः अस्माकम् हे इन्द्रावरुणा! गृणाना स्तूयमानौ पृङ्क्तम् पृची सम्पर्के। सम्पर्चयतम्। दत्तमित्यर्थः। रयिम् धनम् सौश्रवसाय शोभनं श्रवो यस्य स सुश्रवा:, तद्भावः सौश्रवसम्। छान्दसत्वाद् युवादिलक्षणः अण्। तस्मै सौश्रवसाय। सुधनत्वायास्माकमित्यर्थः। हे देवौ!। उत्तरोऽर्धर्चः परा च ऋक् वरुणस्यैव केवलस्य विभक्तस्तुतिः। इत्था सत्यम् गृणन्तः स्तुवन्तो वयम् महिनस्य महतो वरुणस्य स्वभूतम् शर्धः बलम् अप न नावा यथा कश्चिदुदकानि नावा तरेत्, एवम् दुरिता पापानि तरेम अतितरेम। अतिक्रामेमेत्यर्थः ॥ ८ ॥

वेङ्कट० क्षिप्रम् अस्मभ्यं हे इन्द्रावरुणौ! स्तूयमानौ सम्पर्चयतम् धनम् अस्माकं शोभनान्नत्वाय देवौ!। इत्थम् युवयोर्महतश्च वेगम् स्तुवन्तः वयम् उदकानीव नावा दुरितानि अति तरेम ॥ ८ ॥

प्र सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः ।
अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ॥ ९ ॥

प्र । सम्ऽराजे । बृहते । मन्म । नु । प्रियम् । अर्च । देवाय । वरुणाय । सऽप्रथः ।
अयम् । यः । उर्वी इति । महिना । महिऽव्रतः । क्रत्वा । विऽभाति । अजरः । न । शोचिषा ॥ ९ ॥

स्कन्द० [7]सम्राजे सम्यग्दीप्ताय सर्वेषाम् ईश्वराय[7] वा बृहते मन्म मननं स्तुतिम्। नु इति पदपूरणः। प्रियम् हृद्यम् प्र अर्च [8]प्रोच्चारय[8] हे भरद्वाजान्तरात्मन्! देवाय वरुणाय सप्रथः

1-1. °त्रातारो ° मूको. 2-2. °रेव°… शुष्मो वि[१] अ[१]; °रेव शुष्मो वि[२]. 3. प्रवर्धयति मूको. 4. °प्तारो मूको. 5. °स्यात वि[२] अ[१]. 6. रण° वि[२] अ[१]. 7-7. स… ईश्व° मूको 8. प्रोचार्य मूको.

सर्वतः प्रथयितृ गुणानाम् । अयम् यः उर्वी द्यावापृथिवीनामधेयमेतत् ( निघ ३,३० )। द्यावापृथिव्यौ महिना महता महित्वः महाकर्मा भत्वा रश्मिप्रक्षेपलक्षणेन कर्मणा विभाति विविधं दीपयति अजरः न इन्धने सति यो न क्षीयते सः [1]अजरः अग्निः स[1] इव शोचिषा दीप्त्या ॥ ९ ॥

वेङ्कट० प्र उच्चारय सर्वेषां राज्ञे महते स्तुतिम्[2] क्षिप्रं प्रियाम् देवाय वरुणाय सर्वतः पृथुतमाम्, यः अयम् अस्माकं[3] महाकर्मा विस्तीर्णे द्यावापृथिव्यौ महता यज्ञेन भासयति आदित्य इव तेजसा ॥ ९ ॥

इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥ १० ॥

इन्द्रावरुणा । सुतऽपौ । इमम् । सुतम् । सोमम् । पिबतम् । मद्यम् । धृतऽव्रता ।
युवोः । रथः । अध्वरम् । देवऽवीतये । प्रति । स्वसरम् । उप । याति । पीतये ॥ १० ॥

स्कन्द० हे इन्द्रावरुणौ! सुतपौ! सुतानाम् सोमानां पातारौ! इमम् सुतम् सोमम् पिबतम् मद्यम् मदकरम् हे धृतव्रता! धृतकर्माणौ!। स्वकर्मणामपरित्यक्तारावित्यर्थः । किञ्च युवोः युवयोः स्वभूतः रथः अध्वरम् यज्ञम् प्रति देववीतये देवभक्षणाय। युवां देवौ हवींषि भक्षयिष्यथ इत्येवमर्थमित्यर्थः। प्रति स्वसरम् 'स्वसराणि' ( निघ १,९ ) इत्यहर्नाम। प्रत्यहमित्यर्थः[4]। उप [5]याति उपगच्छति पीतये सोमपानाय च[5] ॥ १० ॥

वेङ्कट० हे इन्द्रावरुणौ! सुतस्य[6] पातारौ![7] इमम् सुतम् सोमम् मदहेतुम् पिबतम् धृतकर्माणौ!। युवयोः रथः यज्ञम् देवकामाय अभ्युपगच्छति स्वसरम् सोमपानाय ॥ १० ॥

इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।
इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन् बर्हिषि मादयेथाम् ॥ ११ ॥

इन्द्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ।
इदम् । वाम् । अन्धः । परिऽसिक्तम् । अस्मे इति । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथाम् ॥

स्कन्द० हे इन्द्रावरुणौ! मधुमत्तमस्य अतिशयेन मधुस्वादस्य वृष्णः वर्षितुः सोमस्य षष्ठीनिर्देशाद् एकदेशं स्वांशलक्षणमिति[8] शेषः। द्वितीयार्थे वा षष्ठी। [9]मधुमत्तमम् अतिशयेन मधुस्वादगुणम् वृषणं वर्षितारं सोमम्[9]। हे वृषणा! वर्षितारौ! आ [10]वृषेथाम् आसिञ्चतम्[10] स्व उदरे। किं कारणम्। उच्यते—इदम् वाम् युवयोरर्थाय अन्धः सोमलक्षणम् अन्नम् परिषिक्तम्

---

1-1. अजरः ··· स मूको. 2. स्तुतिं वि[2] अ[1]; स्तुतिः क लभ. 3. नास्ति क लभ, [4]दं यो वि[2] अ[1]. 4. प्रत्यहनीत्यर्थः मूको. 5-5. याति ··· मूको. 6. सुत[0] वि[2]. 7. [0]तारं वि[2] अ[1]. 8. स्वांशल[0] मूको 9-9. मधुत्तमम ··· वितु ··· सोम मूको. 10-10. [0]आसि[0] मूको.

ग्रहादिषु पात्रेषु क्षारितम् अस्मै अस्माभिः। एतज्ज्ञात्वा आसद्य अस्मिन् अस्मदीये बर्हिषि मादयेथाम् तृप्यतम् ॥ ११ ॥

वेङ्कट० हे इन्द्रावरुणौ! मधुमन्तम् वृषाण्यम्[1] सोमम् हे वर्षितारौ! [2]आ सिञ्चतम्[2]। इदम् युवाभ्याम् अन्नम् अस्माभिः परितः सिक्तम् पात्रेषु आसद्य[3] अस्मिन् बर्हिषि तृप्यतम् ॥ ११ ॥

[4]इति पञ्चमाष्टके प्रथमाध्याये द्वादशो वर्गः[4] ॥

[ ६९ ]

[5]भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्राविष्णू देवता। त्रिष्टुप् छन्दः[5]।

सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ १ ॥

सम्। वाम्। कर्मणा। सम्। इषा। हिनोमि। इन्द्राविष्णू इति। अपसः। पारे। अस्य।
जुषेथाम्। यज्ञम्। द्रविणम्। च। धत्तम्। अरिष्टैः। नः। पथिऽभिः। पारयन्ता ॥ १ ॥

स्कन्द० 'द्यावापृथिव्यादि[6] प्रथमगैन्द्रावैष्णवमुच्यते[6]। 'घृतवती' (ऋ ६,७०) इत्येतद् द्यावापृथिव्यम्, एतस्मात्प्रथमम् एतत् सूक्तम् इन्द्राविष्णुदेवत्यम्। समित्युपसर्गः हिनोमीत्याख्यातेन सम्बध्यते। हिनोतिश्च वृद्ध्यर्थः, हि गतौ वृद्धौ चेति। सम् हिनोमि संवर्धयामि वाम् युवाम् कर्मणा स्तुतिलक्षणेन सम् इषा अन्नेन च सोमलक्षणेन संहिनोमि हे इन्द्राविष्णू! अपसः कर्मणः यागलक्षणस्य पारे अन्ते अस्य। एतत् ज्ञात्वा जुषेथाम् सेवेथाम् यज्ञम् अस्मदीयम्, द्रविणम् [7]च धनं च धत्तम्[7] दत्तम्, अरिष्टैः अहिंसितैः नः अस्मान् प्रति पथिभिः मार्गैः पारयन्ता पृणातिरत्र सामर्थ्याद् गत्यर्थः, स्वार्थे च णिच्। गच्छन्ती ॥ १ ॥

वेङ्कट० सम् गमयामि वाम् स्तोत्रेण अन्नेन च हे इन्द्राविष्णू! अस्य कर्मणः पारे। तृतीयसवने तौ युवाम् जुषेथाम् यज्ञम्, धनम् च धत्तम्[8] अहिंसितैः अस्मान् मार्गैः पारयन्तौ[8] सुखे ॥ १ ॥

या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ २ ॥

या। विश्वासाम्। जनितारा। मतीनाम्। इन्द्राविष्णू इति। कलशा। सोमऽधाना।
प्र। वाम्। गिरः। शस्यमानाः। अवन्तु। प्र। स्तोमासः। गीयमानासः। अर्कैः ॥ २ ॥

स्कन्द० या यौ विश्वासाम् सर्वासाम् जनितारा स्तोतृभिरभिलषितार्थसंपादनद्वारेण जनयितारौ मतीनाम् मन्यतेरर्चतिकर्मणः[9] (द्र. निघ ३, १४) एतद्रूपम्। स्तुतीनाम्। इन्द्राविष्णू कलशा लुप्तोपममेतत्। कलशाविव सोमधाना सोमस्य निधानभूतौ[10]। आत्मभूतावित्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः।

1. 'ष' मूको. 2-2. सिञ्च मूको. 3. आसाद्य मूको. 4-4. नास्ति मूको. 5. द्यावापृथिव्या मूको. 6-6. नास्ति वि[1]. 7. धनम् वि[1] अ[1]. 8. °यन्तौ वि[1] अ[1]. 9. °र्चति° अ[1]. 10. निधान° मूको.

तौ वाम् युवाम् गिरः शस्त्रलक्षणा वाचः शस्यमानाः शस्त्रधर्मेणोच्चार्यमाणाः प्र अव्यन्तु[1]। प्राप्नुवन्त्वित्यर्थः। प्र स्तोमासः प्राव्यन्तु स्तोमा अपि स्तोत्रलक्षणाः गीयमानासः सामगानधर्मेणोच्चार्यमाणाः अर्कैः अर्कशब्दोऽत्र स्तोतृवचनः, 'अर्को मन्त्रो मरुतो हविष्मान्' (ऋ १,१६७,६) इति यथा। स्तोतृभिर्होत्रादिलक्षणैः ॥ २ ॥

वेङ्कट० यौ विश्वासाम् स्तुतीनाम् जनयितारौ इन्द्राविष्णू सोमस्य निधानौ कलशावित्यौपमिकम्[2]। प्र गच्छन्तु वाम् तौ[3] शस्यमानाः[4] गिरः अस्माभिः, स्तोमाश्च गीयमानाः स्तोतृभिः ॥ २ ॥

इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना ।
सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः ॥ ३ ॥

इन्द्राविष्णू इति। मदपती इति मदऽपती। मदानाम्। आ। सोमम्। यातम्। द्रविणो इति। दधाना।
सम्। वाम्। अञ्जन्तु। अक्तुऽभिः। मतीनाम्। सम्। स्तोमासः। शस्यमानासः। उक्थैः ॥

स्कन्द० हे मदपती! माद्यन्ति येन तन्मदं मदकरं द्रव्यम् तस्याधिपतिभूतौ! इन्द्राविष्णू! मदानाम् निर्धारणे एषा षष्ठी। मदकराणां मध्ये सोमम् वाम् मदं प्रति आ यातम् आगच्छतम्। द्रविणो द्रविणा उ द्रविणो। उकारः पदपूरणः। धनानि दधाना ददतौ। सङ्गच्छन्ताम् अक्तुभिः आगतौ च सन्तौ याम् युवाम् ताम् अञ्जन्तु अभिगच्छन्त्वित्यर्थः। प्रथमार्थे सोमोऽत्र लक्षुरुच्यते, 'होतारमक्तोरतिथिं विभावसुम्' (ऋ १०,९२,१) इति यथा। मेधाविनां एषा तृतीया। सोमाः मतीनाम् 'मतयः' (निघ ३,१५) इति मेधाविनाम। अभिव्यक्तय स्तोत्रपठमानानां स्वभूताः। अथवाऽक्तुशब्दोऽभिव्यक्तिवचनः। मतयः स्तुतयः। स्तोमा अपि शस्त्रलक्षणाः शस्यमानासः शस्त्रलक्षणानां[5] स्तुतीनाम्। स्तोमासः सम् गच्छन्ताम् स्तोमा अपि शस्त्रलक्षणाः शस्यमानासः शस्त्रधर्मेणोच्चार्यमाणाः उक्थैः उक्थशब्दात् 'तत्करोति' (पावा ३,१,२६) इति णिच्, पचन्तात् पचादिकः अच्। उक्थसंज्ञकशस्त्रप्रयकारिभिः[6] होत्रकैः ॥ ३ ॥

वेङ्कट० हे इन्द्राविष्णू! सोमानां पती! आ यातम् इमम् सोमम् धनान्येव दधानौ[7]। सम् अञ्जन्तु वाम् स्तुतीनाम् अञ्जनैः स्तोतारः। सम् अञ्जन्तु 'स्तोमाः शस्यमानाः[8] शस्त्रैः सह वामिति ॥ ३ ॥

आ वामश्वासो अभिमातिषाह इन्द्राविष्णू सधमादो वहन्तु ।
जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृणुतं गिरो मे ॥ ४ ॥

आ। वाम्। अश्वासः। अभिमातिऽसहः। इन्द्राविष्णू इति। सधऽमादः। वहन्तु।
जुषेथाम्। विश्वा। हवना। मतीनाम्। उप। ब्रह्माणि। शृणुतम्। गिरः। मे ॥ ४ ॥

स्कन्द० वाम् युवाम् अश्वाः अभिमातिषाहः षीड् हिंसायाम् इत्यस्य अभिमातयः हिंस्राः शत्रुसेनाः

1. अव्यन्तु मूको. 2. ॰पमिति वि॰ अ॰ क; वित्यौपमिति लभ. 3. नास्ति मूको. 4. ॰मानो वि॰ अ॰. 5. स्तोत्र…क्षणानां मूको. 6. ॰शस्त्र … इतत्र॰ मूको. 7. मदधानौ वि॰ अ॰. 8-8. सोमाश्वस्य॰ वि॰ अ॰.

वा, तासामभिमवितारः हे इन्द्राविष्णू! सधमादः सह युवाभ्यां माद्यन्तीति 'सधमादः आ वहन्तु आनयन्तु । युवामपि जुषेथाम् सेवेथाम् विश्वा सर्वाणि हवना आह्वानानि मतीनाम् मेधाविनामस्माकम्[1] । उप ब्रह्माणि 'ब्रह्म' ( निघ २,७ ) इत्यन्ननाम, तस्य च कर्मभूतस्य उपेति चोपसर्गस्य श्रुतेर्योग्यक्रियापदाध्याहारः । उपगच्छतम् अन्नानि सोमलक्षणानि । शृणुतम् च गिरः स्तुतिलक्षणा वाचः मे मम ॥ ४ ॥

वेङ्कट० आ वहन्तु वाम् अश्वाः शत्रूणां सोढारः इन्द्राविष्णू! सह मदन्तः[2] । जुषेथाम् विश्वानि ह्वानानि[3] स्तोतॄणाम्, उप शृणुतम् च स्तोत्राणि गिरः च मदीयानि ॥ ४ ॥

इन्द्रा॑विष्णू॒ तत् प॑न॒याय्यं॑ वां॒ सोम॑स्य॒ मद॑ उ॒रु च॑क्रमाथे ।
अकृ॑णुतम॒न्तरि॑क्षं॒ वरी॒योऽप्र॑थतं॒ जी॒वसे॑ नो॒ रजां॑सि ॥ ५ ॥

इन्द्रा॑विष्णू॒ इति॑ । तत् । प॒न॒याय्य॑म् । वा॒म् । सोम॑स्य । मदे॑ । उ॒रु । च॒क्र॒मा॒थे॒ इति॑ ।
अकृ॑णुतम् । अ॒न्तरि॑क्षम् । वरी॑यः । अप्र॑थतम् । जी॒वसे॑ । नः॒ । रजां॑सि ॥ ५ ॥

स्कन्द० हे इन्द्राविष्णू! तत् पनयाय्यम् स्तोतव्यम् वाम् युवयोः । यत् किम् । उच्यते — सोमस्य मदे सतिसप्तमी । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः[4] । यत् सोमस्य मदे सति[5] । सोमेन मत्तौ सन्ताविरयर्थः । उरु बहु चक्रमाथे क्रामथः[6] । शत्रूनन्वेषमाणौ परिक्रमथ इत्यर्थः । यच्च अकृणुतम् वृष्टिप्रदानद्वारेण कुरुथः अन्तरिक्षम् वरीयः उरुतरम् । अथवा अकृणुतमिति कृणोतेर्हिंसार्थस्य[7] रूपम् । 'धिन्विकृण्व्योर च' ( पा ३, १, ८० ) इत्येवम् उकारः प्रत्ययः अकारश्चान्तादेशः । हिंस्थः अन्तरिक्षम् । अन्तरिक्षस्य च हिंसा तदाश्रितस्य मेघस्य हिंसया । यच्च उरुतरमन्तरिक्षमाश्रितम् मेघं हिंस्थ इत्यर्थः । यच्च अप्रथतम् पृथूनि कुरुथः । दत्थ[8] इत्यर्थः । जीवसे जीवनाय नः अस्माकम् रजांसि उदकानि वृष्टिलक्षणानि ॥ ५ ॥

वेङ्कट० हे[9] इन्द्राविष्णू! तत् स्तोतव्यम् युवयोः । सोममदार्थे[10] युवाम् उरूणि पदानि विक्रमेथे । तथेदम् अन्तरिक्षम् अकृणुतम् उरुतरम्[11] । तथा सर्वान् लोकान् अस्माकं जीवनाय अप्रथतम् ॥ ५ ॥

इन्द्रा॑विष्णू ह॒विषा॑ वावृधा॒नाग्रा॑द्वाना॒ नम॑सा रातहव्या ।
घृता॑सुती॒ द्रवि॑णं धत्तम॒स्मे स॑मु॒द्रः स्थः॑ क॒लशः॑ सोम॒धानः॑ ॥ ६ ॥

इन्द्रा॑विष्णू॒ इति॑ । ह॒विषा॑ । व॒वृ॒धा॒ना । अग्र॑ऽअद्वाना । नम॑सा । रा॒त॒ऽह॒व्या ।
घृता॑सुती॒ इति॑ घृत॑ऽआसुती । द्रवि॑णम् । ध॒त्त॒म् । अ॒स्मे इति॑ । स॒मु॒द्रः । स्थः॒ । क॒ल॒शः॑ । सो॒म॒ऽधानः॑ ॥ ६ ॥

---

१. "धासिनोऽश्वा" मूको. २. "न्तौ मूको. ३. स्तनानि वि"; रवनानि अ". ४. यच्छब्दश्रुतेस्तच्छब्दो" मूको. ५. नास्ति वि". ६. चक्रमथ मूको. ७. कृणोति" च वि"; कृणोति" वि". ८. दत्त मूको. ९. नास्ति वि' अ'. १०. सोमे म" ल कम. ११. नास्ति वि".

स्कन्द० हे इन्द्राविष्णू ! हविषा सोमलक्षणेन वावृधाना वर्धमानौ हे अग्राद्वानौ ! अग्राणि श्रेष्ठानि हवींषि, तेषामत्तारौ ![1] । न च केवलेन हविषा । किं तर्हि । नमसा नमस्काररूपेण च स्तोत्रेण[2] । हे रातहव्या ! अन्यैरपि यजमानैर्दत्तहविष्कौ ! घृतासुती । आसुतिशब्दोऽत्र रसवचनः, 'त्वया मर्तासः[3] स्वदन्त[4] आसुतिम्[5]' ( ऋ २,१,१४ ) 'द्रवत्र[6] सर्पिरासुतः' ( ऋ २,५,६ ) इति यथा । घृतरसौ । घृतस्य पातारावित्यर्थः । द्रविणम् धनम् धत्तम् दत्तम् अस्मे अस्मभ्यम् । किञ्च समुद्रः स्थः । समुद्रसाम्यादिदं समुद्रशब्देनाभिधानम्, व्यत्ययेनैकवचनम्[7] । गाम्भीर्येण महत्त्वेन च समुद्रसदृशौ स्थः । कलशः कुम्भोपममेतत् । तत्रापि व्यत्ययेनैवैकवचनम्[8] । कलशाविव च सोमधानः सोमस्य निधानभूतौ ॥ ६ ॥

वेङ्कट० हे इन्द्राविष्णू ! हविषा वर्धमानौ सोमस्याभिषुतस्य यज्ञमुखे अत्तारौ ! नमस्कारेण सह यजमानैः दत्तहविष्कौ 'घृतमासुयते हूयते ययोः तौ'[9] द्रविणम् धत्तम् अस्मे[10] । समुद्द्रवन्ति यस्मात् सोमाः[11] सः[11] समुद्रः[11] कलशः सोमनिधानः स युवां भवथः ॥ ६ ॥

इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ।
आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥ ७ ॥

इन्द्राविष्णू इति । पिबतम् । मध्वः । अस्य । सोमस्य । दस्रा । जठरम् । पृणेथाम् ।
आ । वाम् । अन्धांसि । मदिराणि । अग्मन् । उप । ब्रह्माणि । शृणुतम् । हवम् । मे ॥ ७ ॥

स्कन्द० [14]हे इन्द्राविष्णू ! युवाम् पिबतम् मध्वः मधुस्वादस्य अस्य सोमस्य । षष्ठीनिर्देशाद् एकदेशं स्वांशलक्षणमिति शेषः[14] । द्वितीयार्थे वा षष्ठी । मधुस्वादम् इमं सोमं हे दस्रा ! दर्शनीयौ ! उपक्षपयितारौ ! वा शत्रूणाम् । मा च स्तोकम्[15] । किं तर्हि । [16]जठरम् उदरम् पृणेथाम्[16] प्रीणयतं पूरयतं वा । यावत्तृप्ति[17] पिबतमित्यर्थः । वाम् युवाम् अन्धांसि अन्नानि सोमलक्षणानि मदिराणि मदकराणि आ अग्मन् आगच्छन्ति । पुनःपुनः प्रभूतानि दीयन्त इत्यर्थः । एतत् ज्ञात्वा उप गच्छतम् ब्रह्माणि, शृणुतम् च आह्वानम् मे मम ॥ ७ ॥

वेङ्कट० इन्द्राविष्णू ! पिबतम् इव मधु सोमस्य । दर्शनीयौ ! जठरम् पूरयेथाम् । आ गच्छन्तु वाम् अन्नानि मदकराणि, उप शृणुतम् स्तोत्राणि ह्वानम् च मे ॥ ७ ॥

उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥ ८ ॥

---

1 तेषा मत्तारौ मूको. 2. स्तोत्रे मूको. 3. मर्तास मूको. 4. स च…दि[1]; स च वि[1] अ. 5. आसुती मूको. 6. द्रविणः मूको. 7. व्यत्य…चन° मूको. 8. °येनै° मूको. 9-9. मतमासुयते यो हूयते तौ वि[1] अ[1]. 10. मस्ते वि[1] अ[1]. 11. सोमा वि[1]. 12. मास्य वि[1] अ[1]. 13. °द्र वि[1] अ[1]. 14-14. इन्द्राविष्णू…शेष मूको. 15. स्तोत मूको. 16-16. जठर…था मूको. 17-17. यावत्तृप्ति मूको.

